# संस्कृतव्याकरणम् (Sanskrit Vyakaran)

## (२४६)

**परीक्षासमयावधिः (Time) होरात्रयम् (३ Hrs)** **पूर्णाङ्काः (Full Marks) - १००**

**निर्देशाः -**

१. अस्मिन् प्रश्नपत्रे [A] भागे १०, [B] भागे १०, [C] भागे १०, [D] ५ इति आहत्य ३५ प्रश्नाः सन्ति।

२. प्रश्नस्य दक्षिणे पार्श्वे संख्यासु (अङ्काःx प्रश्नाः=पूर्णाङ्काः) इति एवम् अङ्कान् निर्दिशति।

३. समे प्रश्ना अनिवार्याः।

---

### [A] कामं दशानां युक्तं विकल्पं चिनुत। १ x १०=१०

१) पाणिनेः गुरुः कः।
(क) पतञ्जलिः (ख) महेश्वरः (ग) इन्द्रः (घ) उपवर्षः

२) जश्-प्रत्याहारे अयं नास्ति।
(क) ग (ख) झ (ग) ब (घ) ड

३) सम्बन्धार्थे षष्ठी अस्ति, किन्तु सम्बन्धस्य अनुयोगी नास्ति चेत् सा...
(क) स्थानषष्ठी (ख) अवयवषष्ठी (ग) अभेदषष्ठी (घ) कारकषष्ठी

४) जनावस्ति इति सन्धौ कस्य स्थाने आदेशः।
(क) पूर्वस्य (ख) परस्य (ग) पूर्वपरयोः (घ) पररूपम्

५) वणिज् छात्रः इति स्थिते प्रथमं किं सूत्रं प्रवर्तेत।
(क) चोः कुः (ख) खरि च (ग) झलां जशोऽन्ते (घ) वा पदान्तस्य

६) रामेषु इति रूपे केन सूत्रेण मूर्धन्यादेशः।
(क) इण्कोः (ख) आदेशप्रत्यययोः (ग) ष्टुना ष्टुः (घ) षः प्रत्ययस्य

७) खगः नगे उपविशति इति वाक्ये नगः किम् कारकम्।
(क) कर्तृ (ख) कर्म (ग) करणम् (घ) अधिकरणम्

८) अजां ग्रामं नयति इति वाक्ये प्रधानं कर्म किम्।
(क) अजा (ख) ग्रामः (ग) अजा ग्रामश्च (घ) एकमपि न

९) इदम् उपपदविभक्तिविधायकं सूत्रम्।
(क) कर्मणि द्वितीया (ख) आधारोऽधिकरणम् (ग) षष्ठी शेषे (घ) चतुर्थी सम्प्रदाने

१०) इदं न कारकम्।
(क) कर्तृ (ख) कर्म (ग) सम्बन्धः (घ) अधिकरणम्

### [B] यथेच्छं दशानां यथानिर्देशम् उत्तराणि लिखत। २ x १०=२०

१) ङिच्च इति परिभाषा कदा प्रवर्तते। इयं कस्य अपवादः। १+१=२

२) अङ्गसंज्ञाविधायकं सूत्रं किम्। अङ्गस्य इति अधिकारः कियद्दूरं व्याप्नोति। १+१=२

३) ष्टुना ष्टुः इति सूत्रस्यार्थं लिखत। तस्य एकम् अपवादसूत्रं लिखत। १+१=२

४) अष्टाभ्य औश् इति सूत्रस्यार्थं लिखत। तस्य उदाहरणं दीयताम्। १+१=२

५) अदसोऽसेर्दादु दो मः इति सूत्रस्यार्थं लिखत। तस्य उदाहरणं दीयताम्। १+१=२

६) शप्श्यनोर्नित्यम् इति सूत्रस्यार्थं लिखत। तस्य उदाहरणं दीयताम्। १+१=२

७) पात्रं हस्तात् पतति इति वाक्ये हस्तात् इति किं कारकम्। केन सूत्रेण। १+१=२

८) मासं गुडधानाः भवन्ति इति वाक्ये द्वितीया केन सूत्रेण। तत्सूत्रार्थश्च कः। १+१=२

९) नन्दनः इत्युदाहरणे कः कृत् प्रत्ययः। केन सूत्रेण विधीयते। १+१=२

१०) वासरूपोऽस्त्रियाम् इति कीदृशं सूत्रम्। इदं सूत्रं क्व न प्रवर्तते। १+१=२

**[C] स्वच्छन्दं दश अनतिदीर्घोत्तरैः समाधत्त।** **४ x १०=४०**

१) अलोऽन्त्यस्य इति अनेकाल्शित् सर्वस्य इति वा सूत्रं व्याख्यात।

२) परः सन्निकर्षः संहिता इति सुप्तिङन्तं पदम् इति वा सूत्रं व्याख्यात।

३) तपरस्तत्कालस्य इति सूत्रं व्याख्यात।

अथवा -

स्तम्भयोः योग्यं युग्मं चिनुत।

| | |
|---|---|
| (क) नदी | (i) रामान् इत्यत्र आन् |
| (ख) घि | (ii) वधू |
| (ग) टि | (iii) पठ् अ ति इत्यत्र पठ् अ समुदायः |
| (घ) अङ्गम् | (iv) कवि |

४) एङि पररूपम् इति वृद्धिरेचि इति अनयोरेकं सूत्रं व्याख्यात।

५) औतोऽम्शसोः इति सूत्रं व्याख्यात।

६) अस्मत् त्वम् इत्यनयोः एकं रूपं साधयत।

७) गोपः गां पयः दोग्धि इति अथवा मेघात् जलं पतति इति अनयोः एकं प्रयोगं साधयत।

८) कर्मणा यमभिप्रैति स सम्प्रदानम् इति सूत्रं व्याख्यात।

९) तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् इति सूत्रं व्याख्यात।

१०) लटः शतृशानचावप्रथमासमानाधिकरणे इति ण्वुल्तृचौ इति अनयोरेकं सूत्रं व्याख्यात।

**[D] छन्देन पञ्च दीर्घोत्तरैः समाधेयाः।** **६ x ५=३०**

१) बाह्ययत्नान् परिचाय्य कस्य कः बाह्ययत्नः इति विस्तारयत।

२) इको यणचि इति अथवा आदिरन्त्येन सहेता इति सूत्रं व्याख्यात।

३) अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इत्यस्य सूत्रं व्याख्यात। अथवा कृत्यप्रत्ययान् परिचाययत।

४) रामः मत्याम् इत्यनयोरेकं रूपं ससूत्रं साधयत।

५) कर्तुरीप्सिततमं कर्म इति अथवा ध्रुवमपायेऽपादानम् सूत्रं व्याख्यात।

--)(O)(--

# प्रश्नपत्रप्रतिमाया उत्तरमाला

## [A] दशानां युक्तः विकल्पः। १ x १०=१०

१) (घ), २) (ख), ३) (क), ४) (क), ५) (क), ६) (ख), ७) (घ), ८) (क), ९) (ग), १०) (ग)

## [B] दशानां यथानिर्देशम् उत्तराणि। २ x १०=२०

१) अल्समुदायबोधकात् पदात् स्थानषष्ठी अस्ति चेत्, आदेशः च अनेकाल् किञ्च ङित् स्यात् चेत् ङिच्च इति परिभाषा प्रवर्तते। इयम् अनेकाल्शित् सर्वस्य इति परिभाषायाः अपवादः। १+१=२

२) यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्। ई च गणः (७.४.९७) इति सप्तमाध्यायस्य अन्तिमसूत्रं यावत् पञ्चसु पादेषु व्याप्नोति। १+१=२

३) ष्टुना ष्टुः इति सूत्रस्यार्थस्तावत् - सकारतवर्गयोः षकारटवर्गाभ्यां योगे षकारटवर्गौ स्तः। अस्य अपवादो हि तोः षि इति सूत्रम्। १+१=२

४) अष्टाभ्य औश् इति सूत्रस्यार्थः - कृताकारात् अष्टनः जश्शसोः औश् इति सूत्रार्थः। उदाहरणं तावद् अष्टौ इति। १+१=२

५) अदसोऽसेर्दादु दो मः इति सूत्रस्यार्थः - अदसः असान्तस्य दात्परस्य उदूतौ स्तः दस्य मः च इति। तस्य उदाहरणं हि - अमू इति।। १+१=२

६) शप्श्यनोर्नित्यम् इति सूत्रस्यार्थो हि शप्श्यनोः आत्परो यः शतुः अवयवः तदन्तस्य नित्यं नुम् स्यात् शीनद्योः इति। तस्य उदाहरणं च भवति पचन्ती इति। १+१=२

७) पात्रं हस्तात् पतति इति वाक्ये हस्तात् इति अपादानकारकम्। ध्रुवमपायेऽपादानम् सूत्रेण। १+१=२

८) मासं गुडधानाः भवन्ति इति वाक्ये द्वितीया कालाध्वनोरत्यन्तसंयोगे सूत्रेण। तत्सूत्रार्थश्च भवति - कालस्य अध्वनः वा द्रव्येण गुणेन क्रियया च सह अत्यन्तसंयोगे सति कालवाचकात् अध्ववाचकात् च शब्दात् द्वितीयाविभक्तिः भवति। १+१=२

९) नन्दनः इत्युदाहरणे ल्युः कृत् प्रत्ययः। नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः इति सूत्रेण विधीयते। १+१=२

१०) वासरूपोऽस्त्रियाम् इति परिभाषासूत्रम्। इदं सूत्रं स्त्र्यधिकारे न प्रवर्तते। १+१=२

## [C] स्वच्छन्दं दश अनतिदीर्घोत्तरैः समाधत्त। ४ x १०=४०

१) बिन्दुः ५.४ / ५.६ द्रष्टव्यः

२) बिन्दुः ४.६ / ४.१२ द्रष्टव्यः

३) बिन्दुः ३.३ द्रष्टव्यः

अथवा तृतीयः पाठः द्रष्टव्यः (उत्तरं दत्तमस्ति)

स्तम्भयोः उत्तराणि - (क)-(ii), (ख)-(iv), (ग)-(i), (घ)-(iii)

४) बिन्दुः ७.७ / ७.४ द्रष्टव्यः

५) बिन्दुः १२.१५ द्रष्टव्यः

६) बिन्दुः १७.१६ / १७.४ द्रष्टव्यः

७) बिन्दुः २१.१ / २३.१ द्रष्टव्यः

८) बिन्दुः २२.४ द्रष्टव्यः

९) बिन्दुः २९.१ द्रष्टव्यः

१०) बिन्दुः २८.४ / २७.१ द्रष्टव्यः

[D] छन्देन पञ्च दीर्घोत्तरैः समाधेयाः। ६ x ५=३०

१) बिन्दुः ३.१ द्रष्टव्यः।

२) बिन्दुः ६.२ / २.१ द्रष्टव्यः

३) बिन्दुः १०.१ द्रष्टव्यः

४) बिन्दुः १०.८ / १३.१२ द्रष्टव्यः

५) बिन्दुः २०.१ / २३.१ द्रष्टव्यः

--)(O)(--